श्री ॥ श्रीव्यासमुनिसुप्रसन्नश्रीवेणुगोपालकृष्णो विजयतेतराम् ॥

श्री मत्परमहंसपरिव्राजकाचार्यपदवाक्यप्रमाणपारावारपारंगत-सर्वतंत्रस्वतंत्र श्रीमद्वैष्णवसिद्धांतप्रतिष्ठापनाचार्यवर्यत्वाद्यनेकगुण-गणालंकृतश्रीमद्विद्यानगरकर्णाटकरत्नसिंहासनाधीश्वरकुन्दापुरश्री-व्यासराजमहासंस्थानाधीश्वरश्रीव्यासराजकोमलकरकमलार्चितश्री रुक्मिणीसत्यभामासमेतश्रीवेणुगोपालकृष्णादिव्यपादपद्माराधकानां तथा श्रीसर्वज्ञाचार्यकरार्चितसंस्थानप्रतिमाश्रीयोगपट्टिकानृसिंहादि भगवन्मूर्त्युपासकश्रीमल्लक्ष्मीमनोज्ञयतिवरकरकमलसंजातश्री-श्रीमल्लक्ष्मीशतीर्थश्रीपादानां दिव्यचरणनलिनयोः सप्रश्रयं सप्रणामं शि.प्र. वेङ्कटरमणेन भक्त्या श्रीव्यासराजनवरत्नपद्यमालास्तोत्रमिदं ८ तम पुष्प स्तबकं श्रीहरिवाय्वोः प्रीतये नववृन्दावने समर्पितम् ॥

# अथात्र किञ्चित् प्रास्ताविकम् ।

अयि भोः सुधियः विदित एवायं भवतां प्राचीनैरखिलैर्विद्वद्भिर्ज्ञानिभिश्च संसेवितः अभीष्टदस्सर्वज्ञकल्पः श्रितकल्पभूजः कलावपि कृष्णसाक्षात्कारेण अन्यथाज्ञानतमः पटलपिहितनयनान् विदुषोऽविदुषश्च लोकान् विज्ञानचन्द्रिकोन्मीलितनयनान् कृत्वा प्रहर्षयन् अयं प्रल्हादचन्द्रः प्रत्यर्थिकरिकंठीरवो व्यासराजश्रीमच्चरणः, यश्चासौ श्रीब्रह्मण्यतीर्थवरेण कयोश्चिद्दंपत्यो संञ्जातः १३३५ शा० तमे ऋषिभूतयुते चाग्निशतोत्तरसहस्रके ।। ब्रह्मण्यतीर्थसंभूतो व्यासराजो बभूव ह ।। (कु०व्या०सं० ताम्रपत्रस्थम्) । इति जातमात्र एवेह अब्बुरुक्षेत्रे (अद्भिः स्वसेवित कण्वजलेन उरु-उत्कृष्टं पौराणिकं ऐतिहासिकं च क्षेत्रं ) पुरुषोत्तमतीर्थगुहामलंकुर्वाणश्चासीदिति ।

तदेतदविरलचारित्र्यकग्रंथजातिकुसुमगुच्छेषु कतिपयैः कुसुमैरिव पद्यैर्निबद्धामिमां स्तुतिकुसुमस्रजं नववृन्दावनेऽस्मिन् दिव्यक्षेत्रे १०८ तम श्रीव्याराजश्रीमच्चरणानां पीठमेवालंकुर्वाणानां भारतेऽत्रादर्शयतीनां श्रीमत्परहंसेत्यादिगुणगणालंकृतानां श्रीमल्लक्ष्मीशतीर्थश्रीपादानां न्यायामृतमंगलावसरे पूज्यपादानाममीषामेव दिव्याज्ञां शिरसा धृत्वा श्रीहरिवाय्वोः प्रीतये भक्त्या समर्पयन् इत्थमभिस्टौमि भुवनगुरुं व्यासराजमित्यलम् ।

दुर्मुखि चैत्र शु. ५ गुरुवार नववृन्दावनं क्षेत्रम् । **वेंकटरमणाचार्यः**



॥ श्रीवेदव्यासाय नमः ॥ हरि ॐ ॥

गोपालकृष्णो जयति सत्यारुक्मिणिसंयुतः
ब्रह्मण्यतीर्थसंभूतव्यासराजवरप्रदः ॥ १ ॥

कल्याणं वितनोतु कंसमथनो गोपालकृष्णोऽनिशं
सत्यापांडवपूजितो यदुपतिस्स व्यासतीर्थाग्रतः ॥
भैष्मीसेवितदक्षिणाङ्घ्रिकमले विन्यस्य वामं पदं
बालस्सुन्दरभंगिभावमधुरो यो नृत्यति स्माद्भुतम् ॥ २ ॥

पातु ब्रह्मण्यतीर्थव्रतिवरातिलकस्तत्त्वविद्याप्रदाता
ध्यायन् ब्रह्मण्यदेवं प्रकटितमहिमा भूसुरैर्वन्द्यपादः॥
सर्वाभीष्टप्रदाता सकलभयहरः सर्वरोगापहर्ता
भास्वान्स्वांशावतीर्णो महितमहिमभाक्
व्यासराजस्तुतोऽस्मान् ॥ ३ ॥

कण्वापगातटगुहोदितगर्जितेन
प्रोद्वेजिता निखिलवादिगजा हि येन ॥
विद्राविताः सपदि संकरदुर्मतान्धाः
तं व्यासतीर्थमृगराजमिमं नमामि ॥ ४ ॥

श्रीकृष्णदेवपृथिवीपतिना स्वराज्य-
लक्ष्म्याश्रितश्च गुरुवत्प्रभुणा सुराणाम् ॥
[1]विद्याधिराट् विजयविठ्ठलभक्तिभाग् यः
स व्यासराट् दिशतु शं सततं प्रसन्नः ॥ ५ ॥

श्रीवेंकटेशपदपंकजादिव्यगन्ध—
संसेवनात्समुदितप्रतिभाप्रभाय ॥
ब्रह्मण्यतीर्थचरणांबुजबंभराय
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ ६ ॥

योगीश्वराय सुखतीर्थकरार्चितश्री-
योगासनस्थनृहरेः समुपासकाय ॥
शान्ताय शश्वदपरोक्षितशौरयेऽस्मै
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ ७ ॥
गोपालकृष्णकृतनर्तनरंजिताय
रागादिदोषरहिताय दृढव्रताय ॥
[२]स्वस्थापितान्ध्रहनुमत्परवेंकटार्च-
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ ८ ॥
श्रीशप्रसादकरमानसपूजनाय
सज्ज्ञानभक्तिसुविरक्तिसुखप्रदाय ॥

प्रह्लादकाय भजतां हि सुरद्रुमाय
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ ९ ॥
श्रीमत्समीरसमयाब्धिसुधाकराय
मिथ्याकुशास्त्रतमसो हि विभाकराय ॥
व्यासत्रयामृतदुहे भुवि देवताभ्यः
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ १० ॥
अक्षादिसिद्धजगतोऽस्य यथोर्णनाभि-
जन्मादिमोक्षदहरेः परमप्रियाय ॥

श्रीमज्जयींद्रपदवीपरिवर्धकाय
श्रीव्यासराजगुरवेऽस्तु नमश्शुभाय ॥ ११ ॥
क्षेत्रेऽब्धुरौ ह्युपगुहं पुरुषोत्तमाख्ये
३ब्रह्मण्यतीर्थगुरुभिर्द्विकविठ्ठलार्चैः ॥
वेदान्तराज्यनिजराज्यपदेऽभिषिक्त
राजाधिराजगुरवेस्तु नमो नमस्ते ॥ १२ ॥
४ वैय्याघ्रपादपुरमध्यसुशोभमान
श्रीव्यासराजहृदयाब्जसुमध्यवर्ती ॥

लक्ष्मीनिवासगुरुणा प्रणुतस्सलक्ष्मी-
नारायणश्च हनुमान् मुदितोऽस्तु कृष्णः ॥ १३ ॥

श्रीव्यासराजमुनिगायनतृप्तचेता
नृत्यन्सुरेन्द्रसुतपूजितपादपद्मः ॥
कुन्दापुरीयमठभिक्षुवरार्च्यमान-
भैष्मीसमेतमुरलीधरमाधवोऽव्यात् ॥ १४ ॥

श्रीमद्ब्रह्मण्यतीर्थव्रतिवरतिलकाल्लब्धजन्मापरोक्ष्यः
लक्ष्मीनारायणार्यान्निजगुरुचरणात्प्राप्तविद्याधिलक्ष्मीः ॥

सोऽयं श्रीव्यासराजो विजयसखहरिं पूजयन्भावपुष्पैः ॥
अग्र्ये वृन्दावनेऽस्मिन् सुखयाति सुजनान्
सर्वदाऽभीष्टवृष्ट्या ॥ १५ ॥
ब्रह्मण्यार्यस्ततोऽभून्नरहरिमनिशं पूजयन्कण्वनद्यां
स्नायान्शिष्याहृतान्नं ह्युदजगमुदकं प्रोक्ष्य तप्तं विधाय ॥
स्नात्वा भुक्त्वा पुनश्च क्वचिदुपगतवान् भूस्थितां विठ्ठलार्चां
शिष्येभ्यो मध्वशास्त्रं ह्यनिशमुपजगौ विठ्ठलप्रीतिमिच्छन् ॥१६॥
अर्थिकल्पितकल्पोऽयं प्रत्यर्थिकरिकेसरी ॥
व्यासतीर्थगुरुर्भूयादस्मदिष्टार्थसिद्धये ॥ श्रीः ॥

पद वाक्यप्रमाणज्ञान्, संप्रदायार्थकोविदान् ॥
व्यासतीर्थमुनीन्वन्दे दुर्वादिफाणिपक्षिपान् ॥

इति श्रीव्यासराजकोमलकरकमलार्चितश्रीरुक्मिणी–
सत्यभामासमेतश्रीवेणुगोपालकृष्णः प्रीयताम् ।
प्रीतो वरदो भवतु । श्रीकृष्णार्पणमस्तु ॥

श्रीशं मध्वं पद्मनाभं वादिद्विपमृगाधिपम् ॥
कवींद्रं कुमतारण्यपावकं तत्वदीपकम् ॥ १ ॥

समीरशास्त्रवागीशं वागीशाख्यं गुरुं परम् ॥
ब्रह्मण्यतीर्थसंभूतं ज्ञानवैराग्यदायकम् ॥
जगद्गुरुं व्यासराजं वादिराजगुरुं भजे ॥ २ ॥
रघुवर्यं सुधींद्रं च श्रीनिवासं परं गुरुम् ॥
दुर्वादिफणिविद्वेषे गुरुमन्तं तपोनिधिं ॥ ३ ॥
रामतीर्थगुरुं वन्दे गोविंदाख्यं यतिं पुनः ॥
तुंगभद्रामध्यगतं नववृन्दावनास्थितम् ॥ ४ ॥

रमणोपपदेनेयं वेंकटेन कृता शुभा ॥
व्यासराजस्तुतिर्भूयात्प्रीत्यै माधवमध्वयोः ॥ ५ ॥
॥ इति श्रीनववृन्दावनस्थगुरुपरंपरास्तोत्रं संपूर्णम् ॥
॥ श्रीकृष्णार्पणमस्तु ॥
॥ इति ॥

[1] विजयविठ्ठलेन व्यासतीर्थैः शश्वत् विजयलक्ष्म्या चाधिष्ठितं विजयनगर-मिति, विद्यानगरमिति च विवेकः ।

[2] चन्नपत्तने पुरंदरदासार्यैर्निर्मितरंगमंटपमध्ये श्रीव्यासराजैरेव स्वस्य हनुमतः श्रीवेंकटेशस्य च मूर्तित्रयं स्वयं निर्माय प्रतिष्ठितमिति प्रांचः ।
[3] श्रीब्रह्मण्यतीर्थगुरुवराः स्वप्नलब्धे प्रतिमाद्वये एकां रंगविठ्ठलार्चां श्रीपादराजयतिभ्यः अन्यां ब्रह्मण्यविठ्ठलार्चां श्रीव्यासयोगिने प्रददुरिति ॥
[4] हुलिकल्

